श्रीः

# वर्णविवेकचन्द्रिका ।

श्रीमदनन्तोपाध्यायसूरिसुतश्रीमत्काशीनाथोपाध्यायसूरिविरचिता ।



सा च

पंडित कालिदत्तमिश्रेभ्य उपलभ्य

श्रीकृष्णदासतनूजनिना

**खेमराजेन**

स्वकीये "श्रीवेंकटेश्वर" नामके

यन्त्रालयेऽङ्किता ।

संवत् १९५४ शक १८[illegible]

श्रीः ।

# अथ वर्णविवेकचन्द्रिका-

प्रारभ्यते ।

श्रीगणेशाय नमः॥नत्वागजानन्देवं शारदां चित्स्वरूपिणीम् ॥ काशीनाथेन विदुषा वर्णवैवेक चन्द्रिका ॥ १ ॥ पुराणं शूकराख्यं वै तंत्रं भुवलसंज्ञकम् ॥ विलोक्य जातिबोधाय रच्यते वर्ण चन्द्रिका ॥ २ ॥ चिन्तनाद्ब्रह्म देवस्य चित्रगुप्तोऽभवत्पुरा ॥ ले

खनीमषिपात्रेण संयुतो लोकवि श्रुतः ॥ ३ ॥ मम कायात्समु त्पन्नश्चित्रगुप्तेति नामतः ॥ धर्मा धर्मविवेकार्थं सदा यमपुरे वस॥ ॥ ४ ॥ कायस्थसंज्ञको वर्णश्चतु र्णां तदनन्तरम् ॥ समुद्भूतो यत स्त्वं हि शूद्रवर्णे प्रतिष्ठितः ॥ ५॥ कायस्थानां तु वर्णानां सेवावृत्ति र्विधीयते ॥ लेखनं गणनं चैव नास्ति शास्त्रेऽधिकारता ॥ ६ ॥ विप्रसेवारतास्ते वै क्षत्रियाणांच सेवनम् ॥ वैश्यानां धनरक्षार्थं

ब्रह्मणानिर्मिताःपुरा ॥ ७ ॥ वे
दशास्त्रे वरारोहे तेषां नास्त्यधि
कारिता ॥ हठाच्छास्त्रं पठेयुस्ते
नरकान्यान्ति पार्वति ॥ ८ ॥ त्र
याणांचैव वर्णानां सेवनं तत्प्रकी
र्तितम् ॥ लेखनं गणनं चैव तेषां
वृत्तिर्नचान्यथा ॥ ९ ॥ चित्रगुप्त
स्य ते पुत्राबभूवुर्द्वादशौरसाः ॥
तेषां नामानि कर्माणि गदतो मे
निशामय ॥ १० ॥ श्रीवास्तव्य
श्च गौडश्च नागरश्चैव माथुरः ॥
अम्बष्ठः शक्रसेनश्च करणश्च

यथाक्रमम् ॥ ११ ॥ अहिठानश्च पांचालो वाल्मीकिर्बाष्कलस्तथा ॥ सूरध्वजश्च विख्यातो द्वादशास्ते प्रकीर्तिताः ॥ १२ ॥ वैश्यकन्याः शूद्रकन्याः प्राप्तास्ते चैत्रगौप्तिकाः ॥ तेषां पुत्राश्च पौत्राश्च सच्छूद्रेषु प्रकीर्तिताः ॥ १३ ॥ अनुशास्य सुतानेवं चित्रगुप्तो दिवं ययौ ॥ सेवनं ब्राह्मणानां च भगवत्याः प्रपूजनम् ॥ १४ ॥ देव्युवाच ॥ देवदेव महादेव लोकानां हितकारक ॥ वर्णानामा

श्रमाणां च संकराणां तथैव च॥ ॥ १५ ॥ उत्पत्तिं श्रोतुमिच्छामि विस्तरेण कृपानिधे॥ कया वृत्त्या महादेव कलौ तिष्ठेच्च मानवः ॥ ॥१६॥ कस्य वंशे समुत्पन्नाः कायस्था लोकविश्रुताः॥इत्याकर्ण्य वचस्तस्याः शंकरो वाक्यमब्रवीत् ॥ १७॥ श्रीमहादेव उवाच ॥ शृणु देवि प्रवक्ष्यामि जातीनांच विनिर्णयम् ॥ अव्यक्ताच्च समुत्पन्ना ब्रह्मविष्णुमहेश्वराः ॥ १८॥ ब्रह्मणा निर्मिता वर्णा मुखबाहू

रुपादतः ॥ ब्राह्मणः क्षत्रियोवै
श्यः शूद्रश्चैव यथाक्रमम् ॥१९॥
मरीचिरत्र्यंगिरसौ पुलस्त्यः पु
लहः क्रतुः ॥ भृगुर्वशिष्ठश्च्यव
वनो नारदो दक्ष एवच ॥ २० ॥
तेषां पुत्राश्च पौत्राश्च ब्राह्मणेषु प्र
तिष्ठिताः ॥ वेदाध्ययनसंपन्नास्त्रि
षु वर्णेषु पूजिताः ॥ २१ ॥ ब्रह्मणो
बाहुदेशाच्चमनुः स्वायंभुवोऽभव
त् ॥ वामबाहोः समुत्पन्ना शत
रूपा पतिव्रता ॥ २२ ॥ तेषां पुत्रा
श्च पौत्राश्च क्षत्रवंशे प्रतिष्ठिताः ॥

चतुर्दशमनूनां च वंशास्ते क्षत्र
जातयः ॥ २३ ॥ ऊरुदेशात्स
मुत्पन्नो ब्रह्मणः प्राणवल्लभे ॥
भलंदनेति विख्यातस्तस्यपत्नी
मरुत्वती ॥ २४ ॥ वत्सप्रीति
सुतस्तस्यप्रांशुस्तस्याऽभवत्सु
तः ॥ प्रांशोःपुत्राःषडासन्वैतेषां
नामानिमेशृणु ॥ २५ ॥ मोदः
प्रमोदोबालश्चमोदनश्चप्रमर्दनः।
शंकुकर्णेतिविख्यातस्तेषांकर्मपृ
थक्पृथक् ॥ २६ ॥ मोदस्यावि
तकर्णोऽभूत्तस्यपुत्रोविविंशतिः।

तेषांपुत्राश्चपौत्राश्चगोपवंशेप्रति
ष्ठिताः ॥ २७ ॥ प्रमोदपुत्राःसं
जातानखलोमनिकृन्तकाः ॥ व
र्णाधमाश्च तेजाता नापितोजाति
संज्ञकः ॥ २८ ॥ वालपुत्राश्चदु
र्द्धर्षा गिरिकाननचारिणः ॥ कौ
लभिल्लेतिसंज्ञावैनीचवृत्तिसमा
श्रिताः ॥२९॥ मोदनस्यचवंशा
येमोदकानांप्रकारकाः ॥ वैश्य
वृत्तिसमाश्रित्य संजाताःपृथिवी
तले ॥ ३० ॥ प्रमर्दनस्यपुत्राये
धार्मिकाःसत्यवादिनः ॥ विप्रभ

क्तियुताः सर्वेवह्निकुण्डसमुद्भवाः ॥ ३१ ॥ प्रमर्दनोऽनपत्यश्चभार्य्ययाचन्द्रसेनया ॥ तपश्चचार सुमहत्पुण्येबदरिकाश्रमे ॥३२॥ तत्रागतोमहादेवोवरंब्रूहीतिचाब्रवीत् ॥ पुत्रंमेदेहिभगवंस्तथास्त्वितिशिवोब्रवीत् ॥ ३३ ॥ अग्निकुण्डात्समुद्भूतास्त्रयःपुत्राःसुधार्मिकाः ॥ अग्रवालेतिखत्रीच रौनियारेतिसंज्ञकः ॥ ३४ ॥ शंकुकर्णस्य ये पुत्राः शूद्रधर्मेषु संस्थिताः ॥ लोहकर्मसुनिष्णाताः

संख्यातालौहकारकाः ॥ ३५ ॥
ब्रह्मणश्चरणाज्जज्ञेविश्वकर्माप्रता
पवान् ॥ तस्यात्मजाश्चदुर्द्धर्षाः
शूद्रवर्णेप्रतिष्ठिताः ॥ ३६ ॥ मन्मथ
स्यचगोपस्यपुत्रीनाम्नीप्रभावती
तयासहविवाहोऽभूद्घृताचीपूर्वज
न्मनि ॥ ३७ ॥ तस्यांप्रजज्ञेषट्
पुत्रान्विश्वकर्मामहामतिः ॥ मा
लाकारःकर्मकारःशंकुकारःकुविं
दकः ॥ ३८ ॥ कुंभकारःकंसकारः
शूद्रवर्णेषुसंस्थिताः ॥ तेषांपुत्रा
श्चपौत्राश्चप्रख्याताःशूद्रजातयः ।

॥ ३९ ॥ मालाकारसुताःसर्वेपु
ष्पकर्मणिसंस्थिताः ॥ कर्मकारा
त्मजाःसर्वेभारवाहस्यकर्माणि ॥
॥ ४० ॥ शंकुकारात्मजास्सर्वे
बभूवुश्चित्रकारिणः ॥ कुविन्दका
त्मजौ जातौ कैरी कुर्म्मीतिसंज्ञ
कौ ॥ ४१ ॥ क्षेत्रकर्मणिनिषणा
तौद्विजभक्तिपरायणौ ॥ तयोः
पुत्रप्रपौत्राश्चशूद्रवर्णप्रतिष्ठिताः ।
॥ ४२ ॥ मृद्घटानांप्रकर्ताहिकुंभ
कारात्मजोऽभवत्॥धातुपात्रस्य
कर्ताहि कंसकारात्मजोऽभव

त् ॥ ४३ ॥ तपस्यन्तंचब्रह्माणं
सत्यलोकेपुरैकदा ॥ प्रस्वेदश्चस
मुद्भूतोललाटात्पतितःपदे ॥४४॥
तस्माज्जातः पुमानेकः श्यामःक
मललोचनः ॥ लेखनीचमषीपा
त्रं विभातिकरकंजयोः ॥४५॥ ने
त्रमुन्मील्यभगवान्ददर्शपुरतः
स्थितम् ॥ पप्रच्छकोभवानीति
सत्यलोकेपितामहः ॥ ४६ ॥
तस्य तद्वचनं श्रुत्वा बालको वा
क्यमब्रवीत् ॥ नामकर्मचमेधा
तर्दैहितुभ्यंनमोनमः ॥ ४७ ॥

नजानेहंस्वपितरंमातरंवासुरोत्त
म ॥ किंकर्तव्यंमयाधीमन्ब्रूहि
विस्तरतः प्रभो ॥ ४८ ॥ इतित
स्यवचः श्रुत्वातमुवाचपितामहः
ममस्वेदात्समुद्भूतः कायस्थोजा
तितुर्य्यगः ॥ ४९ ॥ चित्रगुप्तेति
नाम्नावै यमलोके व्रजाधुना ॥
मृतानां मानवानां वैलेख्यंतत्रशु
भाशुभम् ॥ ५० ॥ धर्माधर्म
विवेकार्थं मयात्वंनिर्मितोधुना॥
नाम्ना कीर्तिमती कन्या विश्वक
र्मात्मजाशुभा ॥ ५१ ॥ सातेप

तीवरारोहाभविष्यतिनसंशयः॥
तस्यांपुत्राभविष्यंतिद्वादशालो
कविश्रुताः ॥ ५२ ॥ ब्रह्मण्यादा
नशीलाश्च विप्रभक्तिपरायणाः॥
लेखकर्मसुनिष्णाताःक्षत्रियाणां
सुराजके ॥ ५३ ॥ इत्युक्त्वावि
रराामाथ सत्यलोके पितामहः ॥
यमलोके स्थितः सोपि लेखनाय
शुभाशुभम् ॥ ५४॥ अथतस्याऽ
भवन्पुत्राद्वादशालोकविश्रुताः॥
गौडश्चनागरश्चैवमाथुरःशक्रसेन
कः ॥ ५५ ॥ अहिठानश्चपांचा

लःश्रीवास्तव्यस्तथैव च ॥ वा
ल्मीकिबाष्कलाम्बष्ठकरणाः सू
रकेतवः ॥ ५६ ॥ पुरैकदाचित्र
गुप्तः सोदिशत्तनयांस्तथा ॥ पु
त्राःशृणुत मद्वाक्यं धारणीयं प्रय
त्नतः ॥ ५७ ॥ विप्राणांचरणेभ
क्तिर्दानशीलास्तथैव च ॥ भवा
न्याः पूजनं पुत्रानान्यदेवस्य पूज
नम् ॥ ५८ ॥ मद्वंश्यायेग्रहीष्य
न्तिविष्णुमंत्रंदुरात्मनः॥ दरिद्र
तां प्रजायन्ते दुःखशोकसमन्वि
ताः ॥ ५९ ॥ तस्माद्भवद्भिर्यं

त्नेनपूजनीयापरांबिका ॥ सेवनं
ब्राह्मणानांचनैवतेषांप्रहेलनम् ॥
॥ ६० ॥ इतिप्रशास्यतान्पुत्रां
श्चित्रगुप्तो यमालयम् ॥ ययौ प्र
सन्नहृदयोलेखनायाशुभाशुभम्
॥ ६१ ॥ तस्यपुत्राश्चपौत्राश्चका
यस्थेषुप्रातिष्ठिताः ॥ क्षत्रियाणां
सुराज्येषुलेखनायप्रकीर्तिताः ॥
॥ ६२ ॥ शनकैस्तुक्रियालोपा
दिमाःक्षत्रियजातयः ॥ म्लेच्छ
त्वंचगतालोकेब्राह्मणादर्शनेनच
॥ ६३ ॥ पौंड्रकाश्चौंड्रद्राविडाः

कांबोजा यवनाःशकाः ॥ पार
दाःपल्हवाश्चीनाःकिरातादरदाः
खसाः ॥ ६४ ॥ वेदशास्त्रावमा
नेनस्वेच्छाचारप्रमाणतः॥कलौ
ते प्रसविष्यन्ति यवनाम्लेच्छ
जातयः ॥ ६५ ॥ श्वेतद्वीपेस्थि
तावर्णाब्राह्मणक्षत्रियादयः ॥ वे
दशास्त्रपरिभ्रष्टाः कलौगौरुण्डसं
ज्ञकाः॥६६॥गिरिकाननदुर्गेषुनि
वासंचाक्रिरेपुरा॥अव्यक्तवाचिन
स्सर्वेधर्मकर्मबहिष्कृताः॥६७॥
म्लेच्छागौरुण्डकाः सर्वेभविष्य

न्तिकलौनृपाः ॥ गवांचविड्वराहाणां मांसस्यास्वादने रुचिः ॥ ॥ ६८ ॥ अग्रवालस्यवीर्य्येणसंजाताविप्रयोषिति ॥ अग्रहारीकस्त्रवानीमाहुरीसंप्रतिष्ठिताः॥६९ क्षत्रियस्यचवीर्य्येणब्राह्मणस्यचयोषिति ॥ भूमिहार्य्योऽभवत्पुत्रो ब्रह्मक्षत्रस्यवेषभृत् ॥ ७० ॥ कुंभकारस्यशुक्रेणशंकुकारस्ययोषिति ॥ बभूवतैलकारश्चपातितोवेदवर्जितः॥ ७१ ॥ मालाकारस्यवीर्य्येणकुंभकारस्ययोषिति ॥

सूत्रधारश्चित्रकारः स्वर्णकारस्त्र
योभवन् ॥ ७२॥ पतितास्तेसदा
सर्वैप्रोच्यन्तेवर्णसंकराः ॥ तेषा
मन्नं न भोक्तव्यं विशेषेण द्विजोत्त
मैः ॥ ७३ ॥ स्वर्णकारःस्वर्णचौ
र्य्याद्ब्राह्मणानांवरानने ॥ बभूव
पतितःसद्योब्रह्मशापेनकर्मणा ॥
॥७४॥सूत्रधारोद्विजानांतुशापेन
पतितोभुवि ॥ शीघ्रंचयज्ञकाष्ठा
निनददौतेनहेतुना ॥७५॥ ब्राह्म
ण्यांशूद्रवीर्य्येणपुत्रांस्तान्प्रब्रवी
म्यहम् ॥ रजकश्चर्मकारश्चमांस

छेत्ताश्वपाचकः ॥७६॥ मण्डःक
लंदरश्चैवसर्वैचाण्डालसंज्ञकाः॥
मालाकारस्यकन्यायां मोदका
रस्यवीर्य्यतः॥७७॥शुण्डीनामा
ऽभवत्पुत्रोमद्यकार्येषु तत्परः॥
क्षत्रवीर्य्येण वैश्यायां कलवारेति
नामतः ॥ ७८ ॥ संजातःपतितः
सोपिवेदधर्मबहिष्कृतः ॥ काय
स्थस्यच भार्य्यायां कर्मकारस्य
वीर्य्यतः ॥ ७९ ॥ सिन्दुरीना
मकायस्थःसंकरेषु प्रकीर्तितः ॥
चन्द्रसेनस्ययाभार्य्यावेधिताज

मदग्निना ॥ ८० ॥ दाल्भ्येनर क्षितापूर्वैसुषुवेसासुतंशुभम्॥सो पिकायस्थतनयांसिंदुरस्यामवा निह॥८१॥ कायस्थाश्चान्द्रसेनी यावर्णसंकरजातयः॥ मृदंगपण वानांचवाद्यनिर्माणकारकाः ८२ कायस्थानांत्रयोभेदास्संप्रोक्ताः प्राणवल्लभे ॥ चित्रगुप्तात्मजाःस वैकायस्थाःशूद्रसंज्ञकाः॥ ८३ ॥ सैंदुरीचांद्रसेनीयौकायस्थौवर्ण संकरौ ॥ विश्वकर्मात्मजःकश्चि

त्कर्मकारेतिसंज्ञकः ॥ ८४ ॥ तस्यकन्याविशालाक्षीभारिषालोकविश्रुता ॥ गान्धर्वेणविवाहेनश्रीवास्तव्यः प्रजगृहे ॥ ८५ ॥ तस्यांपुत्रोऽभवत्सुभ्रुलोकनाथेतिसंज्ञकः ॥ रजकस्यसुतापाणिंजगृहेसोपिदुर्मतिः ॥८६॥ तस्यवंशाश्चखारेयाः कायस्थालोकनिंदिताः ॥ कर्मकारस्यवीर्य्येणमोदकारस्ययोषिति ॥ ८७ ॥ सर्वस्मात्पतितोजातः कैवर्त्तौलो

कविश्रुतः॥ नाविकर्मणितद्वृत्तिः
कल्पितामुनिभिःपुरा ॥ ८८ ॥
शुण्डःकैवर्तकन्यायांधीवरोलो
कनिंदितः ॥ दस्युप्रायाश्चतेसर्वे
गिरिकाननवासिनः ॥ ८९ ॥
कलौसंसर्गदोषेणबहुसंकरजात
यः ॥ तासांनामानिसंख्याश्चको
वावक्तुंक्षमःप्रिये ॥ ९० ॥ वैद्यो
ऽश्विनीकुमारेणजातश्चविप्रयोषि
ति ॥ वैद्यवीर्य्येणशूद्रायांबभूवुर्ब
हवःसुताः ॥ ९१ ॥ तेचग्रामगु

णज्ञाश्चमंत्रौषधिपरायणाः कश्चि
त्पुमान्ब्रह्मयज्ञेयज्ञकुण्डात्समु
त्थितः ॥ ९२ ॥ ससूतोधर्मवक्ता
चपुराणेषुप्रकीर्त्तितः ॥ वैश्या
यांसूतवीर्य्येणपुमानेकोबभूवह
॥९३॥ सभाटोवावदूकश्चसर्वेषां
स्तुतिपाठकः ॥ एषतेकथितो
देविपृथिव्यांजातिनिर्णयः॥९४॥
वर्णसंकरदोषेण बह्वयोन्याः स
न्तिजातयः ॥ ब्राह्मणःक्षत्रियो
वैश्यः शूद्रश्चापरवर्णजः ॥९५॥

अनुलोमविलोमाभ्यांषट्त्रिंशल्लक्षजातयः ॥ ९६ ॥

इतिश्रीमदनन्तोपाध्यायसूरिसुतश्रीमत्काशीनाथोपाध्यायसूरिविरचिता वर्णविवेकचन्द्रिकासमाप्ता ॥

---

पुस्तक मिलनेका ठिकाना–
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" छापाखाना–मुंबई.

# जाहिरात ।

| नाम. | की. रु. आ. |
| --- | --- |
| मनुस्मृति सटीक कुल्लूकभट्टकृत संस्कृत टीका· सहित जिल्दबंधी | २–० |
| मनुस्मृति सान्वय भाषाटीका ग्लेज | २–८ |
| तथा रफ् | २–० |
| व्रतराजअतिउत्तमटिप्पणीसहितजिस्मेंवर्षभरकी-सबतिथियोंकेव्रतउद्यापननिर्णयकथाहैं | ४–० |
| व्रतराजटिप्पणीसहित रफ् | ३–० |
| निर्णयामृत ( अनेक प्राचीन ग्रंथोंसे शुद्ध-हुवाहै ) | १–१२ |
| याज्ञवल्क्यस्मृति मिताक्षरा पं० मिहिरचंदकृतपद, योजना, भावार्थ और तात्पर्यार्थ और टिप्पणी तथा भाषाटीकासहित अत्युत्तम | ६–० |
| धर्मसिंधु ❀ | ३–० |
| निर्णयसिंधु टिप्पणीसहित अत्युत्तम | ३–० |
| तथा रफ्कागज | २–८ |

# जाहिरात।

| नाम. | की. रु. आ. |
|---|---|
| अष्टादशस्मृति उत्तम शुद्ध मोटा टैप | २–० |
| विवादार्णवसेतु(धर्मशास्त्र वन्याय राजनीति) | २–० |
| बृहत्पाराशरीस्मृति. ( धर्मशास्त्र ) | १–८ |
| पाराशरीस्मृतिका उत्तरखंड | ०–४ |
| शांतिमयूख. ❀ | १–० |
| प्रपंचसारविवेक ( इस जन्ममें मनुष्यका अवश्य कर्त्तव्य कर्म ) | १–० |
| दयानन्दतिमिरभास्कर भाषाटीका पं०ज्वाला-प्रसादजीकृत ( दयानन्दमत खण्डन ) | ३–० |
| पाराशरीस्मृति ( छोटी ) | ०–३ |
| क्षौरनिर्णयसटीक. | ०–४ |
| क्षौरनिर्णय मूल | ०–१ |
| तिथिनिर्णय | ०–२ |
| प्रायश्चित्तेंदुशेखर | ०–१० |
| धर्मराजका लेखा | ०–८ |

# जाहिरात ।

| नाम. | की. रु. आ. |
|---|---|
| आशौचनिर्णय | ०—२ |
| भवाब्धिसेतु भाषाटीकासहित | ०—१२ |
| वर्णविवेकचंद्रिका | ०—२ |
| स्मृत्यर्थसागर माध्वसंप्रदायी धर्मशास्त्र वैष्णवोंको परमोपयोगी | १—४ |
| शुद्धिविवेक ( सूतकोंसे शुद्धीका निर्णय ) | ०—८ |
| दानचंद्रिका | ०—१० |
| शांतिसार ( सब प्रकारकी शान्ति हैं ) | १—४ |
| गंगास्थित्यानिर्णय भाषाटीका | ८—२ |
| आचारार्क. | ०—१२ |
| आचारादर्श | ०—१२ |
| श्राद्धविवेक ( इसमें सब श्राद्धोंकी विधिहैं) | ०—१२ |
| प्रतिष्ठामयूख | ०—६ |
| आशौच निर्णय भाषाटीका | ०—४ |
| सनातनधर्मदीपक भाषा ( धर्मशास्त्रानुकूल | |

